University of Mysore

Oriental Research Institute Publications
SANSKRIT SERIES No 97

GENERAL EDITOR
SRI H. DEVEERAPPA, M.A.,
*Director, Oriental Research Institute, Mysore*

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीवेदान्ताचार्यविरचितः

# तत्त्वमुक्ताकलापः

श्रीनृसिंहराजप्रणीतानन्ददायिन्याख्यव्याख्यासंवलितया
मूलकृदुपज्ञसर्वार्थसिद्ध्याख्यवृत्त्या समलङ्कृतः
चतुर्थसंपुटम्

# TATTVAMUKTĀKALĀPA
AND
# SARVĀRTHASIDDHI
OF
## SRI VEDĀNTĀCHĀRYA
WITH THE
COMMENTARY ĀNANDADĀYINĪ OF SRI NRSIMHARAJA
Vol IV

EDITED BY
VIDWAN T. T. SRINIVĀSAGOPĀLĀCHĀRYA,
*Rt First Resident Pandit, Oriental Research Institute, Mysore.*

MYSORE
PRINTED BY THE SENIOR ASST DIRECTOR, GOVT BRANCH PRESS
1956



श्रीतत्त्वमुक्ताकलापसर्वार्थसिद्धिप्रणेतारः कवितार्किकसिंहसर्वतन्त्रस्वतन्त्र

## श्रीमद्वेदान्ताचार्याः

(A D. 1270-1369)

॥ श्रीः ॥

श्रीमते हयवदनपरब्रह्मणे नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# सव्याख्यसर्वार्थसिद्धिसहिततत्त्वमुक्ताकलापस्थनायकसरस्य प्रस्तावना

जयति निगमान्ततत्त्वं जयति च वेदान्तदेशिकी सूक्तिः ।
तदुभयमननविभूम्ना तृप्तास्सन्तो जयन्तु भुवि विबुधाः ॥

अयि मान्या निखिलनिगमान्ततत्त्वनिर्धारणबद्धादरास्सुधीमणयः ! सुविदितमेवैतत्तत्रभवतां यत्किल कवितार्किकसिंहैः सर्वतन्त्रस्वतन्त्रैः श्रीमद्वेदान्ताचार्यैः निगमान्ततत्त्वधारणसौकर्यार्थं स्रग्धरावृत्तपरिशोभमानपद्यमुक्तामणिभिर्ग्रथितं तत्त्वमुक्ताकलापाख्यं प्रबन्धरत्नं सूत्रप्रबन्धवदतिस्तरमपि सकलार्थसंग्राहकं जगतीतले विराजत इति ।

तस्यास्य प्रबन्धरत्नस्य मूलकृद्भिरेवाचार्यपादैः प्रणीता नातिविस्तृता नातिसंकुचिता च वृत्तिरूपा सर्वार्थसिद्ध्याख्या व्याख्या मूलश्लोकसंगृहीतार्थविवरणरूपा परिदृश्यते । यथोक्तं तैरेवाचार्यपादैर्ग्रन्थादौ—

नातिव्यासव्यतिकरवती नातिसंकोचखिन्ना
वृत्तिस्सेयं सरसरुचिरा कल्प्यतेऽस्माभिरेव ॥

इति । तदिदं सव्याख्यं तत्त्वमुक्ताकलापाख्यं प्रबन्धरत्नं जडद्रव्यसरः, जीवसरः, नायकसरः, बुद्धिसरः, अद्रव्यसरः, इति पञ्चभिर्ग्रन्थान्तरालिकभागैस्सराख्यैर्विभक्तं दृश्यते ।

अत्र च विशिष्टाद्वैतसिद्धान्तनिर्धारणैदंपर्येण युक्तिप्रमाणसंप्रदायोपपत्त्यादिप्रकाशनपूर्वकं भगवद्रामानुजसंयमीन्द्रस्थापितं निगमान्ततत्त्वजातं समग्राहि । प्रसङ्गादत्रेतराणि वैदिकान्यवैदिकानि च दर्शनानि तत्तद्युक्तिप्रमाणादिविमर्शनपुरस्सरं सुपरीक्षितानि चेत्येतत्प्रबन्धपरिशीलयितॄणामपाणिपिहितमिति नात्रास्माभिरधिकं प्रस्तूयते ।

तस्यास्य प्रबन्धरत्नस्य जडद्रव्यसराह्वयः प्रथमो भागः पुरा प्रथमसंपुटे श्रीमन्नृसिंहराज-श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालस्वामिवर्यप्रणीताभ्यां आनन्ददायिनी-भावप्रकाशाख्याभ्यां व्याख्या-टिप्पणाभ्यां सार्धमेतत्संस्थातः संमुद्रय प्राकाश्यमनायि।

तदनु द्वितीये संपुटे द्वैतीयीकजीवसरगतो जीवाणुत्वनिरूपणान्तो ग्रन्थभागोऽपि ताभ्यामेवानन्ददायिनीभावप्रकाशाख्य-व्याख्याटिप्पणाभ्यां सह प्रकाशितः।

तदनन्तरं च परुद्वत्सरे तृतीये संपुटे जीवसरगत एव तदुपरितनो मोक्षोपायभूतभक्तिनिरूपणान्तोऽपरोऽपि भागस्ताभ्यामेवानन्ददायिनीभावप्रकाशाख्यव्याख्याटिप्पणाभ्यां सहैव मुद्रयित्वा प्राकाश्यमुपनीतः।

तदिदानीं भावप्रकाशाख्यटिप्पणप्रणेतॄणां श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालस्वामिवर्याणां गूढार्थसंग्रहाभिख्यश्रीभाष्य-टिप्पणप्रणयने तन्मुद्रापणादिषु चोररीकृतावधानतया प्रकृतावशिष्टभावप्रकाशाख्यटिप्पणप्रणयनेऽवश्यंभाविनं विलम्बं, परस्तादेतत्परिशिष्टतया पृथगवशिष्टभावप्रकाशटिप्पणमुद्रापणं, मुहुर्मुहुरहमहमिकयाऽऽवेद्यमानं बहूनां प्रेक्षावतां मुद्रितसव्याख्य-सर्वार्थसिद्धिप्रबन्धावेक्षणकौतूहलं, सुबहोः कालात्समारब्धमुद्रणस्य सव्याख्यसर्वार्थसिद्धिप्रबन्धस्यास्य प्रकृते एकया व्याख्यया वाऽपि साकं मुद्रापणेन समापनौचित्यं चानुचिन्तयतामेतत्संस्थाध्यक्षाणां निदेशमनुरुध्य संपुटेऽस्मिन् तत्त्वमुक्ताकलापस्थस्तृतीयो नायकसर आनन्ददायिनीव्याख्यामात्रसंवलितया सर्वार्थसिद्ध्याख्यव्याख्यया साकं संमुद्रय प्रकाश्यते।

एतद्ग्रन्थप्रणेत्रादिविषयेऽवश्यवक्तव्यांशस्सर्वोऽपि प्रथम एव संपुटे प्रकाशित इति न पुनरत्र तद्विषये लेखनीं प्रसारयामः।

## एतत्संपुटगतनायकसरप्रतिपाद्यविषयसंग्रहः

एतत्संपुटपरिदृश्यमाने नायकसरे—परब्रह्मणो जगच्छरीरकत्व-जगत्कर्तृत्व-जगदुपादानत्व-वाच्यत्व-वेद्यत्व-शाब्दमुख्यवृत्ति-विषयत्वादीन् प्रसाध्य, नारायणेतरस्य परतत्त्वतामभिमन्यमानानां बहूनां वादिनां मतानि निरस्य नारायणस्यैव परतत्त्वतां सुबहु-

प्रमाणादिप्रपञ्चनपुरस्सरं स्थापयित्वा, ईश्वरसाधकानां नैयायिकाभिमतानां कार्यत्वादिहेतूनां प्रतिक्षेपपुरस्सरमीश्वरस्य शास्त्रैकसमधिगम्यत्वं संसाध्य, परब्रह्मणश्चिदचिदीश्वरविकारवत्त्व-सर्वानुवृत्तसन्मात्रत्व-स्वलीलार्थजीवादिपरिणामित्वौपाधिकजीवभाववत्त्व-साविद्यत्वादिवादिमतानि प्रमाणयुक्त्यादिप्रपञ्चनपूर्वकमपाकृत्य, भावरूपाज्ञानसाधकानि पञ्चपादिकाविवरणचित्सुखीयाद्युपलभ्यमानान्यनुमानानि जगन्मिथ्यात्वसाधकदृश्यत्वाद्यनुमानानि च निराकृत्य, परब्रह्मणोऽप्राकृतनित्यविभूतिमत्त्वं शुभविग्रहवत्त्वं अस्त्रभूषणादिमत्त्वं परव्यूहादिरूपपञ्चकवत्त्वं पूर्णषाड्गुण्यवत्त्वं सर्वज्ञत्वं सर्वशक्तित्वं इच्छावत्त्वं साध्यप्रसादादिमत्त्वं च साधयित्वा ईश्वरनिरूपणप्रयोजनाभिधानेनोपसंहृतमित्ययमत्र सामान्यतः प्रतिपाद्यप्रधानविषयसंग्रहः। विशेषतः प्रतिपाद्यविषयाश्च पृथगनुपदं प्रदर्शितायां विषयसूचन्यां द्रष्टव्या इति विस्तरभियाऽत्र विरम्यते।

## उपसंहारः

१. संपुटेऽस्मिन्नादावेतत्संपुटगतनायकसरस्थप्रतिपाद्यविषया यथामति समग्राहिषत।

२. तदनन्तरं सर्वार्थसिद्धिमूलभूततत्त्वमुक्ताकलापस्थनायकसरगतश्लोकाः तत्तद्व्याख्यास्थलप्रदर्शनार्थं शिरसि तत्तत्पुटसंख्यानिर्देशपूर्वकं प्रेक्षावतां सुग्रहत्वाय पृथङ्निरदिश्यन्त।

३. तदन्वत्रत्यसर्वार्थसिद्धौ तत्र तत्रोपलभ्यमानाः सर्वार्थसिद्धिकृत्प्रणीतास्संग्रहकारिकास्समुद्धृत्य पृथक्प्रादर्शिषत।

४. ततः परमेतत्संपुटगततत्त्वमुक्ताकलापस्थनायकसरगतश्लोकार्धानां अकारादिवर्णक्रमेण सूचनी न्यवेशि।

५. तत उपरिष्टादेतत्संपुटदृश्यमानानां सर्वार्थसिद्धिकृत्प्रणीतसंग्रहकारिकार्धानामप्यकारादिवर्णक्रमेण सूचनी प्राकाशि।

६. तत ऊर्ध्वमेतत्संपुटगतसर्वार्थसिद्ध्यानन्ददायिन्योरुल्लिखितानां प्रमाणवचनानां प्रायस्तत्तदाकरसूचनपूर्वकं तत्तदुल्लेखपुटसंख्यानिर्देशसहितं चाकारादिवर्णक्रमेण सूचन्याविष्कृता।

७. ततः परस्तादेतत्संपुटगतसर्वार्थसिद्ध्यानन्ददायिन्यो-स्सामान्यतो विशेषतश्चोद्धृतानां ग्रन्थकृन्नाम्नां ग्रन्थनाम्नां च तत्तदुद्धृतिपुटाङ्कसंसूचनपूर्वकं सूचनी प्रादर्शि ।

८ अन्ते च सीसकाक्षरयोजकाद्यनवधानोपजनितमक्षरस्खा-लित्यादिकं परिहर्तुमशुद्धसंशोधनपत्रिकाऽपि समयोजि । तथाऽपि मानुषशेमुषीसुलभेनानवधानेनावश्यंभाविनः प्रमादान् क्षमन्तां प्रमोदन्तां च गुणैकग्राहिणो विपश्चिन्मणय इत्यभ्यर्थ्यते ॥

वेदान्ततत्त्वमुक्तारत्नैर्मुक्ताकलापकं कृत्वा ।
सर्वार्थसिद्धिदाता स जयतु वेदान्तदेशिकः श्रीमान् ॥

इत्याशास्ते च.

सहृदयविद्वद्विधेयः

तिरु. तिरु. श्रीनिवासगोपालाचार्यः,

मैसूरु — महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्था-

ता॥ ८-१-१९५५. — विश्रान्तप्रधानपण्डितः.

# एतत्संपुटस्थनायकसरस्थप्रतिपाद्यविषयसूचनी

---

| | विषय | पुटसंख्या |
|---|---|---|
| 42 | नैयायिकाभिमतानामीश्वरसाधकानां सर्वेषामपि हेतूनां स्थालीपुलाकनीत्या निरासः. | 109 –112 |
| 43 | ईश्वरस्य शास्त्रैकवेद्यत्वसाधनफलकथनम्, ईश्वरानुमानदूषणेऽपि शास्त्राविरोधकथनं च. | 113 |
| 44 | ईश्वरास्यानुमानिकतानिरासे प्रसक्तस्य शास्त्रयोन्यधिकरणसांख्याधिकरणविरोधस्य निस्तारः. | 114—115 |
| 45 | ईश्वरस्य जगदुपादानत्वे निर्विकारश्रुत्यविरोधौचित्ययोस्समर्थनम्. | 116—119 |
| 46 | ब्रह्मण्यन्यैरपि किंचिद्विशेषणाभ्युपगमावश्यंभावेन शास्त्रानुमतचिदचिद्वैशिष्ट्याभ्युपगमस्यैवोचितत्वाभिधानम् | 120—121 |
| 47 | चिदचिदीश्वरविकारवद्ब्रह्मवादिमतस्य निराकरणम् .. | 122—124 |
| 48 | सच्चित्सुखस्वरूपब्रह्मणस्सर्वत्रानुवृत्तिरिति मतस्य निरसनम्. | 125—129 |
| 49 | अव्यक्तवत् ब्रह्मणः स्वलीलार्थं जीवादिपरिणाम इति भेदाभेदवादिमतस्य निरासः. | 130—132 |
| 50 | अनाद्यनत्यन्तभिन्नजडोपाधिप्रयुक्तब्रह्मपरिणामवादिजैनगन्धिभास्करपक्षस्य विकल्पषट्कोद्भावनपूर्वकं निरसनम् | 133- 138 |
| 51 | निरस्तसमस्तभेदकूटस्थविज्ञानैकरसं ब्रह्मैवाविद्यातिरोहितं प्रपञ्चात्मना विवर्तत इति सौगतगन्धिमतस्य निरासः. | 139—140 |
| 52 | ब्रह्मणोऽविद्यया तिरोधानस्य तदधीनस्य विक्षेपस्याप्यनिष्टापत्त्या दूषणम्. | 141—145 |
| 53 | ब्रह्मणोऽविद्यादर्शनस्य दोषनिरपेक्षत्वसापेक्षत्वपक्षद्वयेऽप्यनिष्टप्रसक्त्या निरसनम्. | 146—149 |
| 54 | भावरूपाज्ञानवादनिरसनम् .... ... | 150—152 |
| 55 | पञ्चपादिकाविवरणोक्तभावरूपाज्ञानवादस्य निरास. | 153—157 |
| 56 | चित्सुखोक्तभावरूपाज्ञानानुमाननिराकरणम् .... | 158—163 |
| 57 | ब्रह्माज्ञानकल्पकमते निर्विकारत्वनिरवद्यत्वादिबोधकश्रुतिविरोधापादनम्. | 163 —167 |

विषयः पुटसंख्या

एवमयमत्र यथामति प्रतिपाद्यार्थस्समग्राहि, इतोऽपि किञ्चिद्विस्तरेण प्रतिपत्रं शिरसि प्रतिपाद्यविषया निर्दिष्टा द्रष्टव्याः ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
गुणैकग्राहिणस्तच्च सहन्तामिह सूरय ॥

इत्यभ्यर्थयते

सहृदयविद्वद्वशंवदः


तिरु. तिरु. श्रीनिवासगोपालाचार्यः

महीशूरराजकीयप्राच्यविद्यासंशोधनसंस्था-
विश्रान्तप्रधानपण्डितः

श्रीः

# एतत्सम्पुटगततत्त्वमुक्ताकलापस्थनायकसरगतश्लोकाः

---

### आगमिकेश्वरसिद्धिः

*[1] व्याप्तयाद्यव्याकुलाभिः [2] श्रुतिभिरधिगतो विश्वनेता [6] स विश्वं
क्रीडाकारुण्यतन्त्रः सृजति [9] समतया जीवकर्मानुरूपम् ।
[11] रोषोऽपि प्रीतये स्यात्सुनिरसविषयस्तस्य निस्सीमशक्तेः
[13] स्वेच्छायां सर्वसिद्धिं वदति भगवतोऽवाप्तकामत्ववादः ॥ १ ॥

### ईश्वरस्य निर्बाधत्वम्

[18] अप्रत्यक्षः परात्मा तदिह न घटते धातुरध्यक्षबाधो
योग्यादृष्टेरभावान्न खलु न भवता [19] स्वीकृतस्स्वेतरात्मा ।
[20] तस्मिन् देहानपेक्षे श्रुतिभिर (धिगते) वसिते देहबाधान्न बाधो
वेदेभ्यो नानुमान [21] न च पुरुषवचास्तिष्ठते बद्धवैरम् ॥ २ ॥

### ब्रह्मणोऽवाच्यत्वावेद्यत्वपरिहारः

[22] वाच्यत्वं वेद्यतां च स्वयमभिदधति ब्रह्मणोऽनुश्रवान्ताः
[25] वाक्चित्तागोचरत्वश्रुतिरपि हि परिच्छित्त्यभावप्रयुक्ता ।
[26] नो चेत्पूर्वापरोक्तिस्ववचनकलहस्सर्ववेदान्तबाध-
स्तात्सिद्धिर्हेतुभिश्चेत्प्रसजति [27] विहतिर्धर्मिसाध्यादिशब्दैः ॥ ३ ॥

### सद्ब्रह्मादिशब्दानां लक्षकत्वानुपपत्तिः

[29] नित्यं ब्रह्मादिशब्दा निरुपधिकसतो लक्षका इत्ययुक्तं
[30] मुख्यस्यान्यस्य [31] हानेर्न च निपुणधियो मुख्यमिच्छन्ति लक्ष्यम् ।

---

* अत्र सर्वत्र पङ्क्तेरुपरि दृश्यमानाः सङ्ख्याः तत्तत्पुटसङ्ख्यासूचिका इति बोध्यम्.

शास्त्रेभ्यस्तत्प्रसिद्धौ सह परिपठनाद्विश्वकर्ताऽपि सिध्ये-
[73] द्धर्मानुष्ठापनार्थं तदनुमितिरतो नैव शक्या कदाचित् ॥ १५ ॥

ईश्वरानुमानभङ्ग

साध्यं यादृक्सपक्षे [74] नियतमवगतं स्याद्धि पक्षेऽपि तादृक्
[75] तस्मात्कर्मादियुक्तः प्रसजति विमते कार्यताद्यैस्तु कर्ता ।
एतत्तत्सिद्ध्यसिद्ध्योर्न घटत इति न क्ष्मादिपक्षे सपक्ष-
[76] व्याप्ताकारप्रसङ्गात्तदनुपगमने न क्वचित्स्यात्प्रसङ्गः ॥ १६ ॥
[77] यत्कार्यस्योपयुक्तं तदिह भवतु नः किं परेणेति चेन्न
ज्ञानादेरुद्भवे तद्विषयनियमनेऽप्यर्थनादिन्द्रियादेः ।
[78] नित्यं ज्ञानं विभोस्तन्न नियतविषयं तेन नान्यार्थनं चे-
न्नानित्यस्यैव दृष्टेस्तव कथमजसंयोगभङ्गोऽन्यथा स्यात् ॥ १७ ॥
[80] किं वा धीच्छे गृहीते विषयनियतये ते हि यत्नोऽत्र नेच्छेत्
[81] निर्हेतुस्तत्प्रमेष्टा भवतु विषयवानेष तद्वत्स्वतस्ते ।
[82] प्रोक्ते यत्ने स्वभावाद्विषयवति सधीः स्यादितीदं क्व दृष्टं
[84] यद्वा धीस्तं हि नित्य न तु जनयति ते सा कथं तन्नियन्त्री ॥ १८ ॥
[85] निःश्वासादिप्रयत्नक्रम इह भवतां जीव एवास्त्वदृष्टे-
[86] र्यद्वा तैरेव सर्वं घटत इति भवेत्तत्कृता सिद्धसाध्यम् ।
क्लृप्तावन्यस्य कर्तृद्वयमुपनमति त्वत्सपक्षे तथा स्यात्
[91] पक्षेऽपीत्यव्यवस्था यदि विफलतया त्यक्तिराद्येऽपि सा स्यात् ॥ १९ ॥
साध्यो हेत्वादिवेदी मत इह कलया सर्वथा वा तवासौ
पूर्वत्रेशो न सिध्येन्न [93] कथमपि भवेद्व्याप्तिसिद्धिः परत्र ।
पक्षस्पर्शाद्विशेषान्न खलु समधिकं पक्षधर्मत्वलभ्यं
[95] कल्प्योऽन्यस्ते [96] विशेषस्सुकृतविषमता जीवशक्तिस्तु सिद्धा ॥ २० ॥

[97] कार्यं स्यात्कर्त्रभावेऽप्यवधिभिरितरैः कालवत्स ह्यसिद्धः
[98] ते चादृष्टप्रयुक्तास्तदपि यतनवत्स्यात्तु यत्नानपेक्षम् ।
[99] एकत्यागेऽन्यहेतुत्यजनमिति च न ध्वंसवत्सावधित्वात्
तस्माद्धेतोरभावे न फलमिति गतिस्तद्विशेषे विशेषः ॥ २१ ॥
[100] धर्मो यावत्सपक्षानुगत उपधिरित्यभ्युपेतस्त्वयाऽपि
[101] त्यागे तस्यात्र तद्वच्छिथिलितनियमाः क्वापि नोपाधयस्स्युः ।
तादृग्धर्मात्ययाच्च प्रकरणसमता [104] स्यान्न चातिप्रसङ्गः
पक्षादिस्थित्यबाधा[105]न्निरुपधिकतया स्यात्परात्मानुमा तु ॥ २२ ॥
[107] सर्वस्यावीतहेतोरपि च निरसनं द्रक्ष्यसि स्वप्रसङ्गे
[111] श्रुत्याऽत्र व्याप्तिसिद्धावलमनुमितिभिर्निष्फलः संप्लवोऽपि ।
तस्मादुल्लोकभूमा स कथमनुमया विश्वकर्ता प्रसिध्येत्
[112] शास्त्रानुक्तत्वबाधद्वयपरिहृतये शास्त्रयोनित्वसूत्रम् ॥ २३ ॥

### सांख्याधिकरणविरोधपरिहारः

[114] प्राज्ञाधिष्ठानशून्यं न तु परिणमितुं शक्तमव्यक्ततत्त्वं
[115] वास्यादौ व्याप्तिसिद्धेरिति यदभिहितं सांख्यसिद्धान्तभङ्गे ।
सोऽपि प्राज्ञव्युदासेऽप्यनुमितिशरणान् प्रत्युपात्तः प्रसङ्गो
नेष्टे तत्सिद्ध्यसिद्ध्योरनुमितिरिति खल्वाशयस्सूत्रकर्तुः ॥ २४ ॥

### ईश्वरस्य जगन्निमित्तोपादानत्वोपपत्तिः

अस्यैवाचिन्त्यशक्तेरखिलजनयितुः स्यादुपादानभावः
सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या ।
[117] निष्कृष्टेऽस्मिन् शरीरिण्यखिलगुणगणालङ्कृतानन्दरूपे
संपद्यन्ते समस्तास्समुचितगतयो निर्विकारादिवादाः ॥ २५ ॥
[118] कर्तोपादानमेव स्वसुखमुखगणे स्वप्रयत्नप्रसूते
संयोगं स्वस्य मूर्तैस्स्वयमुपजनयन्नीश्वरोऽप्येवमिष्टः ।

सर्वोपादानभावस्तत इह घटते सर्वकर्तर्यमुष्मिन्
119 सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेतम् ॥ २६ ॥

ईश्वरस्य जगत्कारणवैशिष्ट्यावश्यंभावः

120 सावित्र्यं केऽपि सोपाधिकमथ कतिचिच्छक्तिभिर्जुष्टमन्ये
स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम् ।
121 नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तु-
स्तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः ॥ २७ ॥

ब्रह्मणश्चिदचिदीश्वरविकारवत्त्वभङ्ग

122 ब्रह्मोपात्तान्विकारान् कतिचिदभिदधुश्चेतनाचेतनेशान्
123 नैतद्युक्तं यदीशादनधिकमनघं निर्विकारं श्रुतं तत् ।
124 भिन्नाया ब्रह्मशक्तेर्विकृतय इति चेद्ब्रह्मजन्यत्वभङ्गो
भेदाभेदोपपाद्यं सकलमिति मते सप्तभङ्गी न दूष्या ॥ २८ ॥

सर्वानुवृत्तसन्मात्रब्रह्मत्वभङ्गः

125 विश्वं चित्तद्गुणानुद्भव इह घटते रत्नगन्धादिनीत्या
126 सर्वं ब्रह्मेत्यधीतं त्रिविधमिति च तद्वाशताद्यस्य चोक्तम् ।
127 तस्मात्सर्वानुवृत्तं सदनवधिदशाचित्रमित्यप्ययुक्तं
प्रत्यक्षागोचरत्वप्रभृतिबहुभिदावादिसर्वोक्तिबाधात् ॥ २९ ॥

ब्रह्मणः स्वलीलार्थजीवादिपरिणामवादभङ्ग.

130 अव्यक्तं त्वन्मतेऽपि ह्यनवयवमथाप्येतदंशा विकाराः
ते चान्योन्यं विचित्रा पुनरपि विलयं तत्र तत्त्वेन यान्ति ।
131 इत्थं ब्रह्मापि जीवः परिणमति विहृत्यर्थमित्यप्यसारं
स्वानर्थैकप्रवृत्तेः प्रसजति च तदा सर्वशास्त्रोपरोधः ॥ ३० ॥

ब्रह्मण औपाधिकजीवभावभङ्गः

132 ब्रह्मैवोपाधिभिन्नं भजति बहुविधां संसृतिं 133 सोऽप्यनादि-
स्तस्मान्नात्यन्तभिन्नो जड इति तु मते दुःखमद्वारकं स्यात् ।
124 सौभर्यादौ व्यवस्था न कथमुपधिभिः स्वावतारेषु चैषा
135 सर्वज्ञस्स्वैक्यवेदी कथमनवधिभिर्जीवदुःखैर्न दुःख्येत् ॥ ३१ ॥
136 बन्धो ब्रह्मण्यशेषे प्रसजति स यदोपाधिसंयोगमात्रात्
सादेश्याच्चेदुपाधौ व्यभिचरति भवेद्बन्धमोक्षाव्यवस्था ।
137 अच्छेद्ये छेदनादिर्विहत उपधिभिर्न स्वतोंऽशस्तवास्मिन्
138 नोपाधिर्जीवितामप्यनुभवितुमलं ब्रह्मरूपोऽप्यचित्त्वात् ॥ ३२ ॥

साविद्यब्रह्मविवर्तवादभङ्गः

नापि ब्रह्मण्यविद्यास्थगितनिजतनौ विश्वमेतद्विवृत्तं
139 तस्मिन् सा स्वप्रकाशे कथमिव विलगेत्तत्प्रकाशैकबाध्या ।
न ह्येतस्मिन्नविद्याविलयकृदधिको वृत्तिवेद्यो विशेषो
140 बाधो वृत्तिस्वरूपाद्यदि भवति तदा ज्ञानबाध्यत्वभङ्गः ॥ ३३ ॥

तिरोधानाद्यनुपपत्तिः

141 छन्नत्वे स्वप्रकाशादनधिकवपुषो ब्रह्मणस्स्यादभावो
भावानां छादनं हि स्फुरणविलयनं तस्य वोत्पत्तिरोधः ॥
142 मिथ्यादोषाद्भ्रमोक्तौ कथमधिकरणं सत्यमित्येव वाच्यं
नाधिष्ठानानवस्था भवतु तव यथा नास्त्यविद्यानवस्था ॥ ३४ ॥

अविद्यादर्शनानुपपत्तिः

145 दोषाभावेऽप्यविद्या स्फुरति यदि ततः किं न विश्वं तथा स्यात्
146 सा चान्यां कल्पिका चेदभिलषति तदा साऽपि चेत्यव्यवस्था ।
नापेक्षा चेदनादेरकलुषधिषणागोचरत्वात्सती स्यात्
748 ब्रह्मैवास्यास्तु दोषो यदि न तु विरमेद्ब्रह्मणो नित्यभावात् ॥ ३५ ॥

भावरूपाज्ञानप्रत्यक्षभङ्गः

[149] ज्ञातेऽज्ञातेऽप्यभावः [150] खलु दुरवगमस्संविदस्तेन भावः
स्यादज्ञानं यदीहाप्यपरिहृतमिदं [151] तद्विरोधादिसाम्यात् ।
[152] तुल्यैवाकारभेदात्परिहृतिरुभयोः क्लृप्तिरत्राधिका ते
[153] मुग्धोऽस्मीत्यादिसाक्षात्कृतिरपि नियतं तत्प्रतिद्वन्द्विगर्भा ॥ ३६ ॥

पञ्चपादिकाविवरणोक्तभावरूपाज्ञानानुमानभङ्गः

स्वाजन्मान्यस्वदेश्यस्वविषयवृतिकृत्स्वव्यपोह्यार्थपूर्वा
[154] ध्वान्तोत्थाद्यप्रभावद्विमतमतिरिहापूर्वनिर्भासनाच्चेत् ।
अज्ञानाज्ञानभेत्री किमियमनुमितिः स्वेष्टभङ्गोऽन्यथा तु
[155] व्यर्थाऽसाविन्द्रियादिष्वतिचरणमसिद्ध्यादि च स्याद्विकल्पे ॥ ३७॥

चित्सुखोक्तभावरूपाज्ञानानुमानभङ्गः

[158] यच्चोक्तं देवदत्तो मितिरितरमितिन्यायता हन्त्यनादिं
मात्वात्तन्मित्यभावाधिकमिति तदपि स्यादबाधं विपक्षे ।
[159] नाभावो भावतोऽन्यो न च पुरुषभिदाऽस्त्येकजीवत्ववादे
[162] दृष्टान्ते ध्वंसकत्वं न च विदितमिदं ध्वंसतामात्रसिद्धेः ॥ ३८ ॥

ब्रह्माज्ञानानुमानानां नित्यनिर्दोषश्रुतिबाध्यत्वम्

[163] अस्पृष्टावद्यतोक्तेर्न खलु विषयतामभ्युपेयादविद्या
न क्षेत्रज्ञोऽपि तापत्रयपरितपनान्नापि तद्ब्रह्म मौग्ध्यात् ।
[165] मिथ्यात्वाद्द्वेषभावो न भवति यदि किं तन्निरासप्रयासै-
रुच्छेत्तव्यापुमर्थान्वयत इह परः कोऽभिलष्येत दोषः ॥ ३९ ॥

अविद्याकल्पकश्रुतार्थापत्तिभङ्गः

[168] शुद्धे ब्रह्मण्यविद्या यदि न घटते तस्य जीवैक्यवाद-
स्तस्मान्निर्दोषतोक्तिर्निरुपधिदशया निर्वहेदित्ययुक्तम् ।

169 प्रत्यक्षादिप्रमाणानुगुणबहुविधश्रुत्यबाधेन नेतुं
शक्येऽप्यैक्यादिवाक्ये बहुगुणनिधये ब्रह्मणेऽसूयसि त्वम् ॥ ४० ॥

मायादिशब्दानां ब्रह्मदोषप्रतिपादकत्वानुपपत्तिः

174 मायाविद्यादिशब्दैः प्रकृतिरभिमता ज्ञानकर्मादयो वे-
181 त्येतत्तत्प्रदेशे स्फुटविदितमतो न त्वदिष्टाऽस्त्यविद्या ।
किं चाविद्यादिशून्यः पर इति विविधाम्नायकण्ठोक्तमर्थं
182 क्षेप्तुं मायादिशब्दः क्षम इति वदत. स्यादविद्या तवैव ॥ ४१ ॥

मायाविद्याविभागभङ्ग

निर्दोषश्रुत्यबाधप्रणयिभिरुदितो ब्रह्मजीवानुबन्धी
183 मायाविद्याविभागोऽप्यफल इह परोन्मोहनार्था हि माया ।
मिथ्यार्थान् दर्शयित्वा विहरणमपि तैस्तादृशं भावयन्ती
184 मायैव स्यादविद्या न कथमितरथा स्यादनुच्छेदनीया ॥ ४२ ॥

अविद्याकल्पककार्यमिथ्यात्वानुपपत्तिभङ्गः

185 मिथ्याभूतस्य सत्यं निरुपधि भजते न ह्युपादानभाव
तस्योपाधिश्च मिथ्यात्मक इति निरधिष्ठानता नास्य युक्ता ।
186 तस्मात्सत्यानृते द्वे मिथुनमिति न सद्विश्वसत्ता ह्यबाध्या
सद्विद्यायां च कार्यं ननु कथमसतस्सद्भवेदित्युपात्तम् ॥ ४३ ॥

उपादानोपादेयसालक्षण्यनियमभङ्ग

190 कार्याणां यत्सरूपं किमपि गुणमयं कारणं कापिलोक्तं
तत्क्षिप्तं माक्षिकादेः क्रिमिमुखजननात्सूत्रकारैर्द्वितीये ।
192 तस्मान्मिथ्यात्मकस्य स्वयमनुपधिकं सत्यमेवास्तु सूतिः
सत्योपादानवादे जगदपि न मृषा स्यादितीष्टं त्विदं नः ॥ ४४ ॥

विश्वमिथ्यात्वसाधकदृश्यत्वानुमानभङ्गः

196 दृश्यत्वाद्विश्वमिथ्यावचसि विहतयोऽसिद्धयश्चात्र बह्व्यः
197 पक्षादेस्सिद्ध्यसिद्ध्योर्न हि गतिरितरा नापि वादाङ्गमीदृक् ।
198 मर्यादा लोकसिद्धां विजहत इह ते नापरा सा प्रसिध्ये-
199 न्निर्मर्यादोक्तिमात्राज्जगदपलपतः किं न सत्यं ततस्तत् ॥ ४५ ॥
साध्ये सत्येतरत्वे कथित इह भवेत्स्वस्य हि स्वान्यभावो
200 नान्यत्सत्य तु दृष्टं तदवधिकभिदासाधने चेष्टसिद्धिः ।
201 सत्यत्वं चेन्निषेध्यं प्रसजति दहनेऽप्युष्णतायां निषेधः
साध्यं त्वक्षाद्यबाध्यं यदि किमपि पर तेन न व्याप्तिसिद्धिः ॥ ४६ ॥
204 स्वात्यन्ताभावदेशे विदितमिति यदि स्थाप्यमिष्टं क्वचित्त-
205 त्तत्रैवेति त्वशक्यं क्वचिदपि न तथा ह्यस्ति सिद्धान्तसिद्धिः ।
207 बाधश्चास्मिन्नुपाधिस्समधिकदशादेशकालाद्युपाधौ
208 नासौ साध्योऽत्र[211] मानं निखिलमपि यतस्तद्विधानैकतानम् ॥४७॥
212 तुच्छत्वं ते न हिष्टं सदसदितरता व्याहतत्वादिदुःस्था-
214 सिद्धा चासौ परेषां [215] भवदनभिमतोऽन्यात्मना वेद्यतादिः ।
226 विश्वं हीदं मृषा नस्तदितरवपुषा त्वन्मतारोपितैश्च
स्यादेवं दूरतस्ते ध्रुवमपसरतोऽप्युक्तदोषानुषङ्गः ॥ ४८ ॥
217 साध्यं मिथ्या न वा ते द्वितयमनुचितं निष्फलत्वादिदोषा-
दाद्यं हीष्टं ममापि प्रसजति भजतस्सत्यभेदः परस्मिन् ।
पक्षीकारेऽस्य [218] बाधादिकमतिचरणं तद्बहिष्कारपक्षे
219 तच्चेद्ब्रह्मस्वरूपं भुवनमभिहितं हन्त सब्रह्मकं स्यात् ॥ ४९ ॥
इष्टं ब्रह्मापि दृश्यं तव च कथयतस्तस्य जिज्ञास्यतादीन्
220 मिथ्या चेद्दृश्यताऽस्मिन्ननु विमतिपदेऽप्येवमेषा त्वयेष्टा ।
222 लिङ्गं जाड्यादिकं चेत्तदपि मम मते ह्यंशतस्स्यादसिद्धं
223 मिथ्यालिङ्गैश्च सिध्येत्किमपि यदि भवेद्बाष्पधूमोऽग्निलिङ्गम् ॥ ५० ॥

### व्यावर्तमानत्वानुमानभङ्गः

229 व्यावृत्त शुक्तिरूप्यं विदितमिह मृषा विश्वमेवं न किं स्यात्
मैवं हेतोरयुक्तेस्स खलु भिदुरता बाध्यता नाशिता वा ।
230 आद्येऽनैकान्त्यमन्त्ये 231 स्वसमयविहतिर्मध्यमे स्यादसिद्धि-
232 र्धीविच्छेदादिकल्पान्तरमपि कथितैश्चूषितं दोषबृन्दैः ॥ ५१ ॥

### अनित्यमिथ्यात्वक्लृप्तिपरिहारः

236 यत्स्यात्तत्सर्वदा स्याद्यदि च न भवेत्तच्च न स्यात्कदाऽपि
क्वापि व्योमारविन्दादिवदिति यदि न 237 व्याहतेस्साध्यहेत्वोः ।
238 मध्ये सत्त्वं गृहीत्वा खलु तदुभयतोऽसत्त्वलिङ्गं गृहीतं
241 सामग्र्या चावधी द्वौ स्फुटतरविदितौ साऽपि तत्तत्प्रवाहात् ॥ ५२ ॥

### निषेधश्रुतीनां प्रत्यक्षादिविरुद्धप्रतिपादकत्वानुपपत्तिः.

242 आम्नायस्यापि शक्तिर्न खलु गमयितुं स्वोपजीव्यप्रतीपं
243 यूपादित्यैक्यवाक्यप्रभृतिभिरितरथा नोपचारं भजेत ।
246 अक्षाम्नायः स्वपूर्वापरविहतिभयान्नेति नेत्यादिवाक्यं
247 वैलक्षण्यादिमात्रं प्रथयति भुवनाद्ब्रह्मणो विश्वमूर्तेः ॥ ५३ ॥

### परोक्षबाध्यत्वयोग्यायोग्यप्रत्यक्षविभागः

प्रत्यक्षेणैव पुंसां भवति दृढतरो देह एवात्ममोहो
248 ज्वालैक्यप्रत्यभिज्ञाद्युभयमपि च तद्बाध्यते ह्यागमाद्यैः ।
तस्मादक्षादिसिद्धं श्रुतिभिरपि जगद्बाध्यतामित्ययुक्तं
संदेहार्थेषु शक्तं यदिह न खलु तद्दोषदूरेष्वपि स्यात् ॥ ५४ ॥

### शास्त्रप्रत्यक्षयोर्दोषसाम्यापादनम्

261 प्रत्यक्षं दोषमूलं श्रुतिरिह न तथा पौरुषेयत्वहाने-
स्तस्मात्सा बाधिकाऽस्येत्यसदखिलधियामन्ततो दोषसाम्यात् ।

254 शास्त्रस्यापि ह्यविद्याप्रभृतिभिरुदयस्सम्मतस्त्वन्मतस्थै-
255 स्तस्यानाविद्यभावे न हि निखिलभिदापह्नवऽशक्यशङ्कः ॥ ५५ ॥

दोषसाम्ये परस्य बाधकत्वानुपपत्तिः

256 दोषोत्थत्वाविशेषे न हि भवति परं पूर्वबाधप्रगल्भं
दोषज्ञानं तु मा भूदविदुषि पुरुषे वस्तुतस्त्वन्यथा तत् ।
257 निर्दोषत्वाभिमन्तृस्वसमयिमतिभिः किं न मिथ्याकृतान्ताः
258 प्राबल्यं चेन्निषेधः पर इति मुखरं तुर्यबुद्धस्य तूर्यम् ॥ ५६ ॥

भेदतन्निषेधश्रुत्योरपच्छेदन्यायानर्हत्वम्

259 निर्दोषं यच्च शास्त्रं तदपि बहुविधं बोधयत्येव भेदं
वाक्ये तत्त्वोपदेशप्रकरणपठिते नान्यपर्यं प्रतीमः ।
260 नात्रापच्छेदनीतिर्नियमति सदोपक्रमन्यायसिद्धेः
262 स्वप्रख्याप्यापलापे श्रुतिरपि वृषलोद्वाहमन्त्रायते वः ॥ ५७ ॥

अलौकिकभेदस्य शास्त्रवेद्यत्वोपपत्तिः

263 भेदः प्रत्यक्षसिद्धो न निगमविषयस्स्यादिति त्वर्भकोक्तिः
264 प्रख्यातादन्यमेनं प्रथयति यदसौ त्वन्मताद्वैतवन्नः ।
265 सन्मात्रग्राहि चाक्षं नियमयसि ततो ब्रह्म दृश्यं मृषा स्यात्
किं ते श्रुत्या तदानीं 266 फलमभिलषतां क्वापशूद्राधिकारः ॥ ५८ ॥

प्रपञ्चमिथ्यात्ववादिनां सौगतसाम्यापादनम्

267 वेदा बुद्धागमाश्च स्वयमपि हि मृषा मानता चैवमेषां
268 बोद्धा बुद्धिः फलं च स्थिरतदितरताद्यन्तरालं च बुद्धेः ।
आतस्त्रैविद्यडिम्भान् ग्रसितुमुपनिषद्द्वारबाणोपगूढैः
प्रायः प्रच्छादिता स्वापटुभिरसुरता पौण्ड्रकाद्वैतनिष्ठैः ॥ ५९ ॥

### प्रपञ्चमिथ्यात्ववादिनां बाधकविकल्पोदाहरणम्

269 त्वन्निष्ठा सिद्ध्यसिद्ध्योः परमतनियतिस्सिद्धिमेवाधिरूढा
270 वेदस्यामानतायां त्वदभिमतहतिर्मानतायां च तद्वत् ।
271 साध्याऽसाध्याऽपि मुक्तिस्त्वदुपगमहता तत्समं चान्यदित्थं
272 रक्षोभ्यः प्रेषितोऽयं रघुपतिविशिखो राहुमीमांसकेभ्यः ॥ ६० ॥

### नित्यविभूतिसद्भावः

शुद्धस्याशुद्धसृष्टिक्रम इति कथितश्शुद्धसत्त्वे तु तत्त्वे
273 स्थानं नित्यं श्रुतं 274 तत्स्मृतमपि 277 कलया तत्र देहाद्यवस्थाः ।
278 सृष्टेः प्रागेकमेवेत्यपि निगमवचः स्रक्ष्यमाणव्यपेक्षं
279 नो चेत्स्वाभीष्टमायोपधिविलये स्वस्ति विश्वप्रसूत्यै ॥ ६१ ॥

### नित्यविभूतेर्जडाजडत्वपक्षौ

280 ज्ञानत्वं चेद्रहस्यागमविदितमिति स्वीकृतं नित्यभूतेः
षाड्गुण्यात्मत्वमेवं प्रसजति सह तत्पाठतोऽतो जडा सा ।
281 तत्सम्बन्धात्कुतश्चित्तदुपचरणमित्याहुरेके परे तु
ज्ञानत्वाजाड्यकण्ठोक्त्यनुगुणमवदन् मुख्यतामात्मनीव ॥ ६२ ॥

### नित्यविभूतेरजडत्वोपपत्तिः

283 निस्संकोचा समस्तं चुलकयति मतिर्नित्यमुक्तेश्वराणां
बद्धानां नित्यभूतिर्न विलसति ततः कस्य सा स्वप्रकाशा ।
मैवं नित्येश्वरादेस्सति मतिविभवे साऽस्तु तेनानपेक्षा
284 वेद्यानुद्भासकाले मतिरिव न तु सा बन्धकाले विभाति ॥ ६३ ॥

### अप्राकृतस्थानादेरनित्यत्वादिपरिहारः

286 तत्त्वान्यप्राकृतानि त्रिगुण इव परीणामतश्चेद्भवेयुः
स्थानादि स्यादनित्यं न यदि न घटते भूततादीति चेन्न ।

अत्रत्यक्ष्मादितत्त्वक्रमनियतगुणप्राक्रियाद्यैकरूप्या-
287 न्नित्येऽपि स्यान्निमित्तानुगतिनियमितस्तत्तदाख्याविशेषः ॥ ६४ ॥

परविग्रहनित्यत्वम्

288 निर्दिष्टं पौष्करादौ स्वयमखिलकृता स्वं वपुर्नित्यसिद्धं
नित्या लिङ्गेति चैकायननिगमविदो वाक्यभाष्यादि चैवम् ।
नित्यत्वं वासुदेवाह्वयवपुषि जगौ मोक्षधर्मे मुनीन्द्रो
289 नित्येच्छातस्तदा तत्तदिह विहतिमान् सांशजन्मादितर्कः ॥ ६५ ॥

परस्यास्त्रभूषणाद्यनुपपत्तिपरिहारः

292 अस्त्रैर्वा भूषणैर्वा किमिह भगवतोऽवाप्तकामस्य तस्मा-
द्देवो देहेऽपि वीतावरण इति जगुः केऽपि जैनोपजप्ताः ।
किं वा देहेन विश्वात्मन इति वदतां किं प्रतिब्रूयुरेते
293 तच्चेत्तस्याश्रितार्थं तदधिकरणकं सर्वमप्येवमस्तु ॥ ६६ ॥

विग्रहादिविधिनिषेधविरोधप्रशमनम्

294 रूपस्थानायुधाख्याजनिलयविधृतिव्याप्तृतीच्छागुणादे-
र्विश्वाधारे निषेधो विधिरपि विषयद्वैतशाम्यद्विरोधौ ।
इत्थंभूते निषेधः क्वचिदपि न विधिं बाधते सावकाशः
295 कल्याणैरस्य योगस्तदितरविरहोऽप्येकवाक्यश्रुतौ च ॥ ६७ ॥

विग्रहादिपञ्चकनिराकरणपरिहारः

296 देहादिर्देवतानां हविरनुभवनं संनिधेर्यौगपद्यं
प्रीतिर्दानं फलस्याप्यसदिति कथयन्त्यर्धलोकायतस्थाः ।
तत्राध्यक्षादिदूरस्वमहिमसदृशाशेषवैशिष्ट्यमासां
297 तत्तद्विध्यर्थवादप्रभृतिभिरविदुस्तत्परैरेव शिष्टाः ॥ ६८ ॥

### परव्यूहादिरूपपञ्चकस्यापि पूर्णषाड्गुण्यवत्त्वम्

299 साधुत्राणादिहेतोस्तदुचितसमये विग्रहांशैः स्वकीयैः
स्वेच्छातस्सत्यरूपो विभुरवतरति स्वान् गुणौघाननुज्झन् ।
300 व्यूहे संकर्षणादौ गुणनियतिरभिव्यक्तिवैषम्यमात्रा-
301 द्वृद्धिह्रासाद्यभावात्स हि भवति सदा पूर्णषाड्गुण्यशाली ॥ ६९ ॥

### व्यूहेषु विशेषाभिमानादिविरोधपरिहारः

शास्त्रादीनां प्रवृत्तिः प्रतितनु नियता स्याद्धि संकर्षणादौ
302 जीवादौ या विभज्याभिमतिरिह लयोत्पत्तिरक्षाविधिश्च ।
तत्तद्विद्याविशेषप्रतिनियतगुणन्यायतस्तौ तु नेयौ
303 सर्वस्यैकोऽभिमन्ता स हि सकलजगद्व्याप्तिनिष्वेककर्ता ॥ ७० ॥

### व्यूहगणनावैषम्यनिर्वाहः

304 त्रिव्यूहः क्वापि देवः क्वचिदपि चतुर्व्यूह उक्तस्तदेवं
व्याघातेऽन्योन्यबाधादुभयमिदमसत्कल्पनामात्रमस्तु ।
तत्राद्ये व्यूहभेदं त्रियुगगुणतया चिन्तनीये परस्मा-
द्युक्ताभेदाविवक्षा तदनुपगमने तत्त्वसंख्यादिबाधः ॥ ७१ ॥

### प्रादुर्भावादिप्रक्रियान्तरोपपत्तिः

305 मूर्तीनां मूलमूलिप्रभृतिषु बहुधा वैपरीत्यप्रतीते-
306 र्वर्णादौ बीजतादिव्यवहृतिवदियं वर्णना भावनार्था ।
मैवं कालादिभेदात्प्रशमितविहतौ कल्पितत्वं न कल्प्य
नो चेद्ब्रह्माद्युदन्तेष्वपि विषमकथाभेदवैयाकुली स्यात् ॥ ७२ ॥

### ईश्वरस्वरूपविषयसमष्टिव्यष्ट्यादिवादनिरासः

307 ईशस्य व्यष्टिभेदानभिदधति मनोवाङ्मयादीन् यदन्ये
308 तत्र द्वेधा यदीष्टा विकृतिरविषया निर्विकारागमाः स्युः ।

नित्यत्रित्वे तु नैकेश्वरनियमगतिर्भ्रान्तिसिद्धे विभागे
309 मायादायादपक्षः श्रुतिरपि नियतैरस्त्वधिष्ठानभेदैः ॥ ७३ ॥

ईश्वरस्य स्वात्मनि शिष्याचार्यत्वाद्यभिनयफलम्

310 युक्तिः प्रश्नोत्तरादेर्न हि पुरुषभिदां बुद्धिभेदं च मुक्त्वा
तस्माद्व्यूहादिभेदे कतिचन पुरुषाः स्युः परेणानुबद्धाः ।
311 तत्र स्वच्छन्दलील स्वयमभिनयति स्वान्यतां सर्ववेदी
तद्वच्छिष्यादिवृत्तिप्रसृतिमिह सतां शिक्षयन् सानुकम्पः ॥ ७४ ॥

आश्चर्यवृत्तान्तविशेषसत्यत्वम्

312 विश्वान्तवर्तिबालोदरगतमखिलं कस्य विश्वासभूमि-
स्तस्मादैपेन्द्रमीदृग्भवतु रसवशादिन्द्रजालं प्रवृत्तम् ।
मा भूदाश्चर्यशक्तेरवितथमिदमित्येव सर्वाप्तसिद्धे-
र्व्याघातस्योपशान्तिस्तदनुगुणदशाभेदयोगादिभिः स्यात् ॥ ७५ ॥

सार्वज्ञ्यानुपपत्तिनिरासः

315 यद्भावित्वेन बुद्धं भवति तदथ चातीतरूपं तदस्मि-
न्नुल्लेखो भिद्यते चेदकरणजमतेरैकरूप्यं प्रकुप्येत् ।
प्राचीनोल्लेख एव स्थितवति तु गते भाविबुद्धिर्भ्रमः स्यात्
316 मैवं पूर्वापरादिक्रमनियतसदोल्लेखसत्यत्वसिद्धेः ॥ ७६ ॥

ईश्वरस्य सर्वशक्तित्वस्थापनम्

318 नीलं किंचित्तदानीमरुणमिति न खल्विन्द्रजालादृतेऽद्धा
नो चेदेवं विरोधः क्वचिदपि न भवेत्कश्च जैनेऽपराधः ।
319 तस्मादीशो विरुद्धद्वितयमघटयन् सर्वशक्तिः कथं स्या-
न्मैवं व्याघातशून्येष्वनितरसुशकेष्वस्य तादृक्त्वसिद्धेः ॥ ७७ ॥

ईश्वरस्येच्छावत्त्वसिद्धिः

320 संगृह्य ज्ञानयत्नौ कतिचन निखिलस्रष्टुरिच्छां तु नैच्छन्
तस्यां द्वेषः क एषामनुमितिशरणानीकनासीरभाजाम् ।
324 श्रुत्या तद्बोधयत्नावभिदधाति यदि क्षम्यतामेवमिच्छा
निर्वाह्यं त्वाप्तकामप्रभृतिवचनमप्यान्यपर्योपरुद्धम् ॥ ७८ ॥

ईश्वरस्य साध्यप्रसादादिमत्त्वम्

325 स्वीकृत्येशानतत्त्वं कतिचन जहतस्तत्प्रसादादिसाध्यं
326 गङ्गाम्भःपञ्चगव्यप्रभृतिवदवदन् पावनत्वादि तस्य ।
तच्छ्रुत्यादिप्रतीपं यदपि च फलदं दर्शितं निष्प्रसादं
327 तच्चैतस्य प्रसादादिति हि निजगदुर्धर्ममर्मज्ञचित्ताः ॥ ७९ ॥

ईश्वरनिरूपणप्रयोजनविशेषः

त्रय्यन्तोदन्तचिन्तासहचरणसहैरेभिरस्मिन् परस्मिन्
328 भक्तिश्रद्धास्तिकत्वप्रभृतिगुणसिरावेधिभिस्तर्कशस्त्रैः ।
स्वार्थत्वस्वाश्रयत्वस्ववशयतनताद्यूहवर्गोपवर्ग-
श्छिद्येताच्छेद्यपूर्वोत्तरसरयुगलस्यूततत्त्वस्थितीनाम् ॥ ८० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
श्रीमद्वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलापे
तृतीयो नायकसरः.

---

श्रीः

# नायकसरेऽस्मिंस्तत्रतत्र सर्वार्थसिद्धौ दृश्यमानाः सर्वार्थसिद्धि-कृत्प्रणीताः संग्रहकारिकाः

---

प्रयोजनादिविरहान्न कर्तेश इति ब्रुवन् ।
तस्य सिद्धावसिद्धौ च व्याघातादिपराहतः ॥ १ ॥
(1 श्लो.–व्या, पुटं 8)

सहकारिभिरारम्भे न स्वातन्त्र्यं विहन्यते ।
तत्सद्भावप्रवृत्त्योश्च स्वाधीनत्वव्यवस्थितेः ॥ २ ॥
कारकान्तरवैधुर्ये किमपेक्ष्य स्वतन्त्रता ।
शरीरमप्यधिष्ठेयं सहकार्येव कुर्वतः ॥ ३ ॥
निरपेक्षस्वतन्त्रस्य सहकारिमतस्सदा ।
अप्रवृत्तिः प्रवृत्तिर्वा नित्यं स्यादिति चेन्न तत् ॥ ४ ॥
तत्तदिच्छाविशेषेण तत्क्रमस्योपपत्तितः ।
इच्छासंतत्यनादित्वान्न च मूलक्षयः क्वचित् ॥ ५ ॥
गुणेतरविपर्यासमन्योन्यसहकारिताम् ।
विवक्षातः क्वचित्प्राहुर्निस्समत्वान्निमित्तताम् ॥ ६ ॥
प्राप्यः परमभोग्यत्वान्निषेव्यः स्वामिभावतः ।
शक्तिकारुण्यभूम्ना च शरण्यस्सीदतां प्रभुः ॥ ७ ॥
बहिरन्तश्च तद्व्याप्तिस्तत्र यत्रोभयं भवेत् ।
विभोरणोश्च न बहिर्नान्तस्तस्मान्न सा तयोः ॥ ८ ॥
विभोर्न च्छिद्रमणुना नाणूनां विभुना च तत् ।
यथाप्रमाणं संबन्धमात्रमेव तयोर्भवेत् ॥ ९ ॥
आकाशव्यतिभेदादेरसंभाव्यस्य चोदना ।
अकाशादिकमिच्छद्भिरनिच्छद्भिश्च दुर्वचा ॥ १० ॥
न विभज्येत गच्छद्भिर्न विहन्ति गतिं च तत् ।
अस्पर्शत्वात्तथाभूतं विभु वाऽविभु वाऽस्ति नः ॥ ११ ॥

विभ्वणुप्रतिषेधेन मध्यमं च निषेधता ।
सर्वासत्त्वं च दुस्साधं सदसत्त्वविकल्पतः ॥ १२ ॥
समस्तमूर्तसंयोगस्संभवेद्यस्य तद्विभु ।
तत्संभवोज्झितं द्रव्यं महत्त्वाणुत्वचित्रितम् ॥ १३ ॥
अणोरणीयान्महतो महीयानित्यनुश्रवः ।
विश्वव्यापित्वतात्पर्यान्न मिथो बाधमृच्छति ॥ १४ ॥
यदल्पपरिमाणेन पृथूनां ग्रसनं श्रुतम् ।
अचिन्त्यमिदमित्येके चिन्तनश्रमभीरवः ॥ १५ ॥

(1 श्लो.-व्या, पुटं 13–17)

य एवं स्यादसर्वज्ञः सर्वज्ञं न स बुध्यते ।
इति ब्रुवाणास्सार्वज्ञ्यं लभन्तां तन्निषेधतः ॥ १६ ॥

(2 श्लो.-व्या, पुटं 22-23)

दुस्साधं क्वचिदप्येवमवाच्यत्वादि कस्यचित् ।
किं पुनस्सर्ववचसां प्रतिष्ठा यत्र तत्र तु ॥ १७ ॥

(3 श्लो-व्या, पुटं 29)

नित्या चेश्वरबुद्धिस्ते नानुभूतिर्न च स्मृतिः ।
न प्रमा न भ्रमश्च स्यात्तत्तत्कारणवर्जनात् ॥ १८ ॥
अनुभूत्यादिहेतूनामभावेऽपि तथा यदि ।
स्मृतिहेतोरभावेऽपि स्मृतिरेषा न किं भवेत् ॥ १९ ॥

(8 श्लो.-व्या, पुटं 81)

ईश्वराकूतमेदं च श्रौतादृष्टं यदीच्छसि ।
नृगुणापूर्वक्लृप्तिस्ते निष्फलैव तदा भवेत् ॥ २० ॥

(9 श्लो-व्या, पुटं 89)

न च स्वेनान्यदेहादेरधिष्ठानादिसंभवः ।
सौभरिन्यायतस्तत्तत्प्रतिसन्धिप्रसङ्गतः ॥ २१ ॥
न च स्वान्यानुमानेऽपि विजातीयत्वकल्पना ।
निरुपाधिकता तत्र भवेदनुमितेस्ततः ॥ २२ ॥
परदेहस्थलिङ्गानामन्यथासिद्धिकल्पने ।
स्वदेहेऽपि तथैवेति नैरात्म्यमवशिष्यते ॥ २३ ॥
आगमादात्मनां सिद्धावीश्वरस्य तु किं पुनः ।
परात्मनिश्चयाभावे त्वागमोऽपि न सेत्स्यति ॥ २४ ॥

(22 श्लो-व्या, पुटं 106–7)

तस्मादेवंविधानेकबाधशङ्कापनुत्तये ।
नित्यनिर्दोषशास्त्रैकवेद्यत्वमिह सूचितम् ॥ २५ ॥
शब्दप्रमाणके तस्मिन् यथाशब्दं व्यवस्थितिः ।
सर्वैरनतिलङ्घ्येति न शङ्कातङ्कसंभवः ॥ २६ ॥

(23 श्लो-व्या, पुटं 113)

न हि वस्तु विकल्प्येत न विरुद्धसमुच्चयः ।
न चोभयपरित्यागो विहर्तिं जहतः क्वचित् ॥ २७ ॥

(47 श्लो-व्या, पुटं 206)

अविधेयमनाधेयमशेषमधिकं समम् ।
नेति वस्तुपरिच्छेदाभावस्स्याद्विश्वदेहिनः ॥ २८ ॥
यस्तु वस्त्वन्तराभावमपरिच्छित्तिमिच्छति ।
कथितोऽसौ कथानर्हः क्षीबोन्मत्तैडमूकवत् ॥ २९ ॥
किंच संख्यापरिच्छेदराहित्यं किं न दृश्यते ।
मानबाधाद्यदि समं निर्बाधेऽर्थे स्थितिः स्थिता ॥ ३० ॥

(47 श्लो.-व्या, पुटं 210-11)

मिथ्यात्वस्य हि मिथ्यात्वे मिथ्यात्वं बाधितं भवेत् ।
सत्यत्वस्य तु सत्यत्वे सत्यत्वं स्थापितं भवेत् ॥ ३१ ॥

(49 श्लो.-व्या, पुटं 218)

दृक्सम्बन्धश्च दृश्यानामसत्यत्वे विवक्षितः ।
सत्यत्वादिविकल्पेन सीदत्यनुपपत्तिमान् ॥ ३२ ॥

(50 श्लो.-व्या, पुटं 225)

संबन्धफलसिद्धौ च स्वरूपे दुरपह्नवे ।
अन्तर्भावबहिर्भावविवादस्त्विह निष्फलः ॥ ३३ ॥
ये च दृग्दृश्यसंबन्धे संयोगादिविकल्पतः ।
दोषाः प्रलपितास्तेऽत्र दृश्याः सत्यत्वभीरवः ॥ ३४ ॥
संबन्धमात्रदौर्घट्याच्चद्विशेषोऽपि दुर्घटः ।
इति चान्धस्य जात्यन्धयष्टिदानोपमं विदुः ॥ ३५ ॥

(50 श्लो.-व्या, पुटं 226)

मिथ्यात्वेन च दृश्यत्वं स्वतस्संबन्धि साधयन् ।
अप्रामाण्यस्वतस्सिद्धिमुद्गिरत्यनया गिरा ॥ ३६ ॥

(50 श्लो.-व्या, पुटं 228)

तत्रापि नश्वरत्वेन नित्यसत्त्वं निरुध्यताम् ।
स्वकालेतरकाले च तेन मिथ्यात्वमिष्यताम् ॥ ३७ ॥
(51 श्लो.-व्या, पुटं 231)

यत्र क्वचिन्न क्वचित्स्यात्खरशृङ्गादिनीतितः ।
इति मध्यमशिक्षा च स्वविधिक्षेपखण्डिता ॥ ३८ ॥
(51 श्लो.-व्या, पुटं 235)

किंचानित्यत्वसत्यत्वे नानित्यं सत्यतां त्यजेत् ।
तदसत्यत्वपक्षे तु नित्यत्वात्सत्यता भवेत् ॥ ३९ ॥
(52 श्लो.-व्या, पुटं 241)

अतः प्रत्यक्षमात्रस्य दोषमूलत्वकल्पना ।
निर्दोषज्ञप्तिसद्भावं न सहेतेति निश्चिनु ॥ ४० ॥
(55 श्लो.-व्या, पुटं 255)

निगूहनं चतुष्काणां द्वन्द्वानां च प्रकाशनम् ।
षाड्गुण्यस्य तथाभूतसमाधिस्थोपयोगतः ॥ ४१ ॥
(69 श्लो.-व्या, पुटं 300)

य एव स्यादसर्वज्ञः सर्वज्ञं न स बुध्यते ।
इति तद्बोधबाधार्थी तन्निषेधेऽपि न क्षमः ॥ ४२ ॥
(76 श्लो.-व्या, पुटं 317)

———

श्रीः

# एतत्संपुटगततत्त्वमुक्ताकलापस्थनायकसरगतश्लोकार्धानां अकारादिवर्णक्रमेण सूचनी

———



---

* एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम्.

*एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम्.

---

*एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम्.

पुटसंख्या

न



प



---

* एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम्.

पुटसङ्ख्या



---

* एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम् .

पुटसंख्या

य



र



ल



व



श



* एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम्.

पुटसंख्या

श



स



---

* एतच्चिह्नाङ्कितानि श्लोकपूर्वार्धानीति बोध्यम् .

## संपुटेऽस्मिन् सर्वार्थसिद्धौ तत्र तत्र दृश्यमानानां ग्रन्थकृत्प्रणीत-संग्रहकारिकार्धानां अकारादिवर्णक्रमेण सूचनी



अत्र A इत्यङ्कितानि सग्रहकारिकापूर्वार्धानि.

B इत्यङ्कितानि तूत्तरार्धानीति ज्ञेयम्.

अत्र [A] इत्यङ्कितानि सग्रहकारिकाणां पूर्वार्धानि. [B] इत्यङ्कितानि तूत्तरार्धानीति ज्ञेयम्.

---

अत्र [A] इत्यङ्कितानि सङ्ग्रहकारिकाणां पूर्वार्धानि, [B] इत्यङ्कितानि तूत्तरार्धानीति ज्ञेयम् .

---

अत्र A इत्यङ्कितानि संग्रहकारिकाणां पूर्वार्धानि, B इत्यङ्कितानि उत्तरार्धानीति ज्ञेयम् .

श्रीः

# संपुटेऽस्मिन् सर्वार्थसिद्ध्यानन्ददायिन्योरुपात्तानां प्रमाणानामकारादिक्रमेण सूचनी

## प

| उपात्तप्रमाणानि | | पृ. सं. | पङ्क्ति सं. |
|---|---|---|---|
| भूयश्चान्ते विश्वमायानिवृत्तिः (स) श्वे. 1-10 | .... | 143 | 14 |
| ,, | .... | 177 | 11 |
| भोगमात्रसाम्यलिङ्गाच्च (स) ब्र. सू. 4-4-21 | .... | 171 | 5 |
| भ्रान्तिज्ञानवतां पुंसां (स) | .... | 131 | 10 |
| भ्रामयन् सर्वभूतानि (स) गी. 18-61 | .... | 177 | 9 |
| **म** | | | |
| मङ्गलानां च मङ्गलम् (स) स. ना. | .... | 39 | 7 |
| मत्प्रसादात् (स) गी. 18-56 | .... | 326 | 12 |
| मन्वर्थविपरीता तु या स्मृतिः (स) | .... | 57 | 9 |
| मम माया दुरत्यया (स) गी. 7-14 | .... | 177 | 6 |
| ,, (आ) गी. 7-14 | .... | 177 | 15 |
| मम साधर्म्यमागताः (स) गी. 14-2 | .... | 6 | 5 |
| ,, | .... | 172 | 5 |
| ममैवांशो जीवलोके (स) गी. 15-7 | .... | 5 | 11 |
| मयाऽध्यक्षेण प्रकृतिः (स) गी. 9-10 | .... | 3 | 11 |
| मल्लमयो ग्रामः (आ) | .... | 281 | 8 |
| मद्दीसुरोर्वीपतिवैश्यकास्ते (स) शिल्पशास्त्रं | .... | 60 | 9 |
| मायां तु प्रकृतिं विद्यात् (स) श्वे. 4-10 | .... | 174 | 7 |
| मायां न सेवे भद्रं ते (स) भा. उद्यो. 68-5 | .... | 176 | 3 |
| मायामात्रमिदं (आ) गौ. का. 1-17 | .. | 178 | 14 |
| मायामात्रं तु (स) ब्र. सू 3-2-3 | .... | 178 | 2 |
| माया वयुनं ज्ञानं (स) | .... | 177 | 2 |
| मायाविनं मायया वर्तमानं (स) वेदनिघण्टौ-धर्मवर्गे 22-22. | | 176 | 3 |
| मुक्तोपसृप्यव्यपदेशाच्च (आ) ब्र. सू. 1-3-2 | .... | 6 | 16 |
| ,, ,, | .... | 171 | 3 |
| मृत्तिकेत्येव सत्यं (स) छा. 6-1-4 | ... | 188 | 3 |
| ,, (आ) छा. 6-1-4 | ... | 190 | 16 |
| मृत्युर्वै परे देव एकी भवति (स) | .... | 179 | 4 |
| मोहयिष्यामि मामवान् (स) | .... | 22 | 7 |

ह



---

# प्रमाणाकरसूचीस्थसंकेताक्षरविवरणम्

अ. बि.—अमृतबिन्दूपनिषत्
अ. शि.—अथर्वशिखोपनिषत्
अ. सू.—अक्षपादसूत्रम्
(आ.)—आनन्ददायिनी
आ. श्रौ.—आपस्तम्बश्रौतसूत्रम्
इ. स.—इतिहाससमुच्चयः
ई.—ईशावास्योपनिषत्
ऋक्सं.—ऋक्संहिता
क.—कठोपनिषत्
के.—केनोपनिषत्
कै.—कैवल्योपनिषत्
कौ.—कौषीतक्युपनिषत्
गी.—भगवद्गीता
गौ. का.—गौडपादकारिका
छा.—छान्दोग्योपनिषत्
त. मु.—तत्त्वमुक्ताकलापः
त. वा.—तन्त्रवार्तिकम्
तै.—तैत्तिरीयोपनिषत्
तै. आ.—तैत्तिरीयारण्यकम्
तै. ब्रा.—तैत्तिरीयब्राह्मणम्
तै. सं.—तैत्तिरीयसंहिता
धा. पा.—धातुपाठः
नृ. उ.—नृसिंहोत्तरतापिन्युपनिषत्
नृ. पू.—नृसिंहपूर्वतापिन्युपनिषत्
न्या. सि.—न्यायसिद्धाञ्जनम्
न्या. सू. भा. टी.—न्यायसूत्रभाष्यटीका
पा. सू.—पाणिनीयसूत्रम्
पु. सू.—पुरुषसूक्तम्
पू. मी. सू.—पूर्वमीमांसासूत्रम्
प्र.—प्रश्नोपनिषत्

बृ.—बृहदारण्यकोपनिषत्
ब्र. बि.—ब्रह्मबिन्दूपनिषत्
ब्र. सू.—ब्रह्मसूत्रम्
भा. उ.—भारतोद्योगपर्व
म. ना.—महानारायणोपनिषत्
म. भा. अनु.—महाभारतानुशासनपर्व
म. भा आश्र.—महाभारताश्रमवासिकपर्व.
म. भाष्यं—महाभाष्यम्
म. भा. शा.—महाभारतशान्तिपर्व
म. स्मृ.—मनुस्मृतिः
महो.—महोपनिषत्
मु.—मुण्डकोपनिषत्
मुक्ति.—मुक्तिकोपनिषत्
मै.—मैत्र्युपनिषत्
मो. ध.—महाभारतमोक्षधर्मपर्व
या. प्र. सं—यादवप्रकाशीयसंग्रहः
या. स्मृ.—याज्ञवल्क्यस्मृतिः
यो. सू. भा.—योगसूत्रभाष्यम्
व. पु.—वराहपुराणम्
वाज.—वाजसनेयकम्
वार्ति.—व्याकरणवार्तिकम्
वासु.—वासुदेवोपनिषत्
वि. पु.—विष्णुपुराणम्
वै. सू.—वैशेषिकसूत्रम्
श्री. रा.—श्रीमद्वाल्मीकिरामायणम्
श्वे.—श्वेताश्वतरोपनिषत्
(स.)—सर्वार्थसिद्धिः
स. नाम.—विष्णुसहस्रनाम
सु.—सुबालोपनिषत्
स्तो. र.—स्तोत्ररत्नं यामुनमुनिकृतम्

———

# संपुटेऽस्मिन् सर्वार्थसिद्ध्यानन्ददायिन्योः सामान्यतो विशेपतश्चोपात्तानां ग्रन्थकृन्नाम्नामकारादि-वर्णक्रमेण सूचनी

---

———

## संपुटेऽस्मिन् सर्वार्थसिद्ध्यानन्ददायिन्योस्सामान्यतो विशेषतश्चोपात्तानां ग्रन्थनाम्नामकारादि-क्रमेण सूचनी

# अशुद्धसंशोधनम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 22 | दे त्वं | देवि त्वं |
| 3 | 20 | अधिाष्ठा | अधिष्ठा |
| 6 | 11 | दुक्तः | दुक्तिः |
| 11 | 19 | स्येन | त्स्येन |
| 12 | 20 | दुख | दुःख |
| 15 | 25 | विभोर्भा-पा | (त्याज्यमिदम्) |
| 21 | 13 | नयति | नयेति- |
| 23 | 1 | त्वयोस्समर्थनम् | त्वपरश्रुतेर्निर्वाहः |
| 22 | 18 | त्ववा | त्वभावा |
| 23 | 17 | सी | सि |
| 24 | 13 | शसि | शश्वसि |
| 36 | 18 | यणसा | यणासा |
| 37 | 17 | त्ययौंथक | त्यथार्थैक |
| 39 | 1 | ष्णोवव | ष्णावेव |
| 42 | 21 | निणी | निर्णी |
| 44 | 8 | तरमिदं " | तरं " |
| 47 | 14 | श्रत्या | श्रुत्या |
| 52 | 17 | तषु | तेषु |
| 60 | 13 | भाह | माह |
| 65 | 8 | तानं | तानां |
| 68 | 20 | मेवेति | मिति |
| 68 | 20 | णैवे | णेवे |
| 75 | 1 | रस्वसा | रसा |
| 75 | 19 | ध्यदि | ध्येदि |
| 75 | 24 | क्रात | क्रान्त |
| 76 | 16 | सिद्ध्यद्ध्यादि | सिद्ध्यादि |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 77 | 1 | कार्यं | काय |
| 80 | 20 | त्नात | त्नेति |
| 85 | .0 | निश्वासे | निःश्वासे |
| 88 | 21 | कत्वदि | कत्वादि |
| 90 | 9 | भानो | मानो |
| 91 | 21 | येङ्र्म | यङ्म |
| 92 | 11 | वागादे | यागादे |
| 92 | 18 | केंञ्चि | किंञ्चि |
| 95 | 10 | निश्वासा | निःश्वासा |
| 95 | 13 | नान्यथा ; स | नान्य(था)स |
| 95 | 15 | शेषसा | शेषस्सा |
| 100 | 9 | चावर्त | च वर्त |
| 109 | 3 | त्कारि | त्कारि |
| 121 | 18 | कार | कारि |
| 124 | 9 | न क | ‘ न क |
| 125 | 6 | पक्षा | पक्षो |
| 145 | 1 | साक्षिस्व | साक्षित्व |
| 146 | 22 | शेन | शे न |
| 147 | 14 | स्यनि | स्य नि |
| 151 | 16 | नस्वस्तु | नन्वस्तु |
| 152 | 21 | गादि | गमादि |
| 157 | 1 | षट्कनिरासः | षट्केणानिर्वाहाद्धेतोर्नि-रासः |
| 157 | 10 | अनन्द | आनन्द |
| 157 | 25 | क्ताभाव | क्तभाव |
| 169 | 1 | रासः | निरासः |
| 170 | 14 | स्याप | अस्याप |
| 170 | 18 | दीनामे | दानीमे |
| 170 | 19 | थान्तरं | र्थान्तरं |
| 170 | 21 | मतर्न्त ‘ | मनन्तं |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 170 | 22 | इ्ति | इति |
| 170 | 23 | क्यीमित्य | क्यमित्य |
| 171 | 13 | त्यत्र तस्यै | त्यत्रस्यै |
| 175 | 3 | ध्यीवाचा | ध्यावाची |
| 175 | 12 | तत्क्यां | तक्यां |
| 175 | 18 | गाना | गाणा |
| 176 | 12 | प्योञ्चि | प्यौञ्चि |
| 177 | 22 | विय | विषय |
| 178 | 6 | रात | रति |
| 178 | 24 | सिद्धोरि | सिद्धेरि |
| 181 | 8 | मिपि | मिरपि |
| 181 | 8 | वौशि | वैशि |
| 186 | 20 | स्वीकार्यामत्यत्राहि | स्वीकार्यमित्यत्राह |
| 189 | 21 | ष्यव | ष्याव |
| 201 | 15 | स्व व | स्वव |
| 203 | 8 | ष्ययह्ना | ष्यवह्ना |
| 203 | 12 | ङ्त्वा. | क्त्वा |
| 207 | 3 | दशदे | दशादे |
| 218 | 12 | त्तर | त्तेर |
| 225 | 6 | हृत्स्या | ह्नात्स्या |
| 227 | 20 | श्रान्त्यि | श्रान्त्य |
| 229 | 1 | त्वप्ताध | त्वसाध |
| 229 | 20 | म सेत्या | न वेत्या |
| 230 | 17 | त्यमे | त्वमे |
| 230 | 20 | कालस | कालास |
| 242 | 6 | षम्वप्र | षस्वप्र |
| 243 | 17 | वोध | बाध |
| 244 | 5 | तथव | तथैव |
| 244 | 23 | सि. वि | सिवि |
| 249 | 16 | चत् | चेत् |

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 252 | 8 | बोध | बाध |
| 254 | 19 | ञ्जाऽध्य | ञ्जोऽध्य |
| 255 | 6 | भद | भेद |
| 256 | 14 | पार | परि |
| 256 | 20 | स्याप्यप | स्यापि प |
| 262 | 21 | ध्यस्त्वर्थ | ध्यर्थ |
| 262 | 23 | स्पराव | स्परवि |
| 263 | 18 | तत्याती | तस्याती |
| 263 | 19 | क्षितग्र | क्षिग्र |
| 265 | 13 | विषत्वं | विषयत्वं |
| 265 | 14 | शास्त्रवि | शास्त्रावि |
| 268 | 19 | स्तिर | स्थिर |
| 279 | 1 | दुस्त्वोक्ते | दुत्वोक्ते |
| 281 | 1 | योपाद | योपपाद |
| 281 | 3 | दु रेके | दुरेके |
| 289 | 1 | स्त्वोपाद | स्त्वोपपाद |
| 295 | 1 | द्विविष | द्विविध |
| 299 | 14 | प्रदान | प्रधान |
| 301 | 22 | संग | सङ्ग |
| 317 | 13 | ततित्वे | तीतत्वे |
| 318 | 17 | स्तुनो | स्तुनोः |
| 321 | 3 | कवद्य | कवेद्य |
| 321 | 5 | सगृ | संगृ |
| 321 | 6 | न ाह | न हि |
| 321 | 12 | उत्कात्त | उत्कोत्त |
| 323 | 4 | तथा | तदा |
| 323 | 15 | द्वरि | द्वारि |
| 323 | 21 | भावान् | भाववान् |

WD 863—GBPM—750—28-2-56.

॥ श्रीमते हयग्रीवाय नमः ॥

॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥

आनन्ददायिनीव्याख्योपेतसर्वार्थसिद्ध्याख्यवृत्त्या सहितः

# तत्त्वमुक्ताकलापः

## तृतीयो नायकसरः

---

तत्त्वमुक्ताकलापः

**व्याप्त्याद्यव्याकुलाभिः**

सर्वार्थसिद्धिः

तदेवं प्रत्यगर्थद्वये प्रथमोद्दिष्टो जीवश्चिन्तितः। अथेश्वरश्चिन्त्यते। तत्र तावत्प्रमाणविशेषात् सिद्धिं प्रस्तौति—**व्याप्त्याद्यव्याकुलाभिरिति**। धर्मप्रवृत्तियुक्तसर्वदेशकालव्यापितयाऽन्यथाकरण-

आनन्ददायिनी

[1]देवि! त्वां मम वल्लभेति निगमाः स्त्रीसूक्तमामब्रुवन्
देव! त्वां मम पादचिह्नघटितोरस्कं परं तेऽवदन्।
इत्येवं [2]वृषशैलनित्यगृहिणोर्नर्मोक्तिपारम्परी
अस्माकं दिशतादनन्तमसकृत्कल्याणपारम्परीम्॥

उद्देश[3]क्रमात्संगतिरित्याह—**तदेवमिति**। तस्मात् प्रथमोद्दिष्टत्वादेव हेतोरित्यर्थः। उद्देशे वा किं नियामकमित्यत्राह—**अथेति**। धर्मस्य धर्म्यनन्तरभावित्वात् बुद्धेश्चेतनधर्मत्वादिति भावः। लक्षणप्रमाणाभ्यां वस्तुसिद्धिः, तत्रापि प्रमाणेन सिद्धे वस्तुनि लक्षणाद्व्यावृत्तिसिद्धिरिति प्रथमं श्रुतिप्रमाणसिद्धमाह—**तत्र तावदिति**। वृद्ध-

---

1 देत्वं—ख. 2 वृषशैलशृङ्गगृहिणोर्नर्मोक्ति—ग. वृषशैलनित्यगृहिणीनर्मोक्ति—क. ख. 3 क्रमस्सं—क. ख.

तत्त्वमुक्ताकलापः

## श्रुतिभिरधिगतो विश्वनेता

सर्वार्थसिद्धिः

शङ्कानर्हाभिरित्यर्थः। यद्वा अनुमानवद्व्याप्तिपक्षधर्मतानिरूपणजनितव्यभिचारसंभवादिरहिताभिरिति। **श्रुतिभिरिति** भ्रमादिमूलत्वासंभवस्थापनम्। शब्दानां सिद्धे व्युत्पत्तिस्तत्र तात्पर्यं च साधयिष्यते। **विश्वनेता**–विश्वेषां यथेष्टं विनियोक्ता। स कथं श्रुतिभिरधिगतः? कारणवाक्येषु सदादिशब्दैः 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिप्रदर्शितस्याव्यक्तापरपर्यायस्य प्रधानस्याभिधानादिति चेत्, तन्न; अव्यक्तस्य "तदैक्षत" "सोऽकामयत" इत्याद्युक्तस्वसङ्कल्पपूर्वकसृष्ट्या[1]द्यसंभवात्। न खल्वीक्षणादिशब्दो भाक्तः; मुख्ये बाधकाभावस्य साधकभूयस्त्वस्य च **शारीरके** स्थापितत्वात्। 'सदेव सोम्येदमग्र आसीत्' इत्याद्यचेतनसामानाधिकरण्यात् कारणमचेतनमिति चेन्न; सामानाधिकरण्यस्य

आनन्ददायिनी

प्रसिद्धिप्राचुर्यादाह—**यद्वेति**। श्रूयत इति श्रुतिरिति नित्यतावगमादित्यभिप्रायेणाह—**भ्रमादीति**। ननु कार्यार्थ एव शब्दानां व्युत्पत्तेः सिद्धे ब्रह्मणि श्रुतिः कथं प्रमाणं स्यादित्यत्राह—**शब्दानामिति**। बुद्धिसर इति शेषः। ननु श्रुतिवाक्ये जडकारणत्वप्रतीतेः कथमीश्वरसिद्धिरित्याशङ्क्य ईक्षत्यधिकरणादिन्यायैस्तत्सिद्धिं स्मारयति–**स कथमित्यादिना। शारीरक इति**। 'गौणश्चेन्नात्मशब्दात्' (ब्र. सू. १-१-६) इत्यादिभिरित्यर्थः। ननु चेतन[2]परत्वे ह्यचेतनवाचिशब्दसामानाधिकरण्यं न स्यादिति शङ्कते—**सदेवेति**। सच्छब्दः सूक्ष्माचिद्विशिष्टचित्पर इति परिहरति—**सामानाधिकरण्यस्येति**। विशिष्टवाचि-

---

[1] द्ययोगात्–घ. [2] परत्वेऽप्यचे–ग.

## सर्वार्थसिद्धिः

स्थूलसूक्ष्मचिदचिद्वस्तुविशिष्टविवक्षयाऽप्युपपत्तेः। सर्वं च जगत् कर्तृशरीरतयाऽऽम्नातम्; "अस्मान्मायी सृजते विश्वमेतत्" इति। ईदृशी च सृष्टिः "सोऽभिध्याय शरीरात्स्वात्" इत्युपबृंहिता। अधीयते चाथर्वणिकाः—

विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः॥
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्।
गौरनाद्यन्तवर्ती सा जनित्री भूतभावनी॥

इति। अगीयत चैतत्—

मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्।

## आनन्ददायिनी

त्वे प्रमाणमाह—सर्वं चेति। [1]अपृथक्सिद्धधर्मवाचकानां धर्मिबोधकत्वादिति भावः। ननु 'अस्मात्' इत्यादिवाक्ये प्रकृतेरेवोपादानत्व[2]प्रतीतिरितीश्वरो निमित्तमात्रमिति शङ्कां पराकरोति—अस्मादिति। स्वाच्छरीरादित्युपबृंहणेन अस्मान्मायीति मायाशरीरकः [3]परमात्मा अस्मात् स्वशरीरभूतादेव विश्वं सृजतीत्यर्थः। प्रकृतिशरीरकात् स्वस्मादित्यन्ये। अन्यथा श्रुत्यन्तरविरोधमभिप्रेत्याह—अधीयत इति। [4]अधिष्ठानस्य शरीरत्वादिति भावः। एवमनभ्युपगमे 'सोऽकामयत' इत्यादिश्रुतिविरोधं, निर्विकारत्व-

---

1 अपृथक्सिद्धवाच—ग. 2 प्रतीतेरीश्वरो—क. ख. 3 परमात्मा स्वाच्छरीर—ग.
4 अधिष्ठितस्य शरी—क. ख.

## सर्वार्थसिद्धिः

इति । अतस्साक्षात् संकल्पाश्रयत्वम्, व्यवधानेन तु विकाराश्रयत्वमिति सर्वाविरोधः । ननु सद्विद्यायां मृत्पिण्डलोहमणिनखनिकृन्तनदृष्टान्तैः "यथा पृथिव्यामोषधयस्संभवन्ति" इत्याथर्वणिकवाक्याच्चाचेतनमात्रोपादानत्वं जगतः प्रतीयत इति चेन्न; मृत्पिण्डादिनिदर्शनानामेकविज्ञानेन सर्वविज्ञानस्यासंभवचोद्यपरिहारपरत्वात्, "यथा पृथिव्याम्"इति वाक्यस्य त्वेकस्माद्विचित्रानन्तोत्पत्तिसंभवार्थत्वात् । न तु चेतननैरपेक्ष्यमेतैस्सू[1]च्यम्; अन्यथा "यथा सतः पुरुषात्केशलोमानि" इति चेतनसान्निधिसापेक्षोत्पत्तिनिदर्शनायोगात् । अस्तु तर्हि तद्वदयस्कान्तादिनयेन निर्व्यापारपुरुषसन्निधानात् प्रकृतेः प्रवृत्तिः, सर्वस्य च कार्यजातस्य जीवकर्महेतु-

## आनन्ददायिनी

विरोधपरिहारं चाभिप्रेत्याह—**अत इति** । ननु सदादिशब्दानां चेतनपरत्वे स्वावान्तरवाक्यविरोधादाथर्वणवाक्यविरोधाच्चेक्षणं गौणं नेतव्यमिति शङ्कते—**नन्विति** । सद्विद्यावाक्यगतनिदर्शनस्याविरोधं दर्शयति—**मृत्पिण्डादीति** । तावताऽपि प्रकृतोपपत्तेरिति भावः । **एकस्मादिति**—[2]लोमानीत्यचेतनस्योपादानताप्रतिपादने न तात्पर्यमिति भावः । उक्तार्थे उपपत्तिमाह—**यथा सत इति** । सतश्चेतनत्वेऽपि स न जीवः, किंत्वीश्वर इत्यानन्दमयाधिकरणसिद्धार्थं वक्तुं जीवपरत्वं शङ्कते—**अस्त्विति** । सतः पुरुषात् केशलोमानीति वाक्यप्रतिपाद्यस्य पुरुषस्य निर्व्यापारस्यापि सन्निधिमात्रेण केशादिविकारवदित्यर्थः । तत्रोपष्टम्भकान्तरमाह—**सर्वस्य चेति** । कर्मवश्यस्यापहत-

---

[1] च्यते-**घ.** [2] 'लोमानीति' इति न दृश्यते—**ग** कोशे.

## सर्वार्थसिद्धिः

कत्वात्, अपहतपाप्मत्वसर्वज्ञत्वादीनां च तस्मिन्नवस्थाभेदेनोपपत्तेरिति ; तन्न ; "यथोर्णनाभिस्सृजते गृह्णते च" इति प्रथमोक्तदृष्टान्तवैघट्यात् ।

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥

इति पुरुषस्यापि पराधिष्ठानेन जगत्सृष्ट्युपयोगोक्तेः । न च जीवस्य सवर्तसमयसंहृतकरणकलेबरस्य मुख्येक्षणादिसंभवः । मुक्तस्तर्हि प्रकृतिपुरुषयोरधिष्ठाता स्यात्; तस्य सत्यसंकल्पस्य स्वेच्छया पितृलोकादिविचित्रकार्यस्रष्टृत्वाम्नानान्मुख्येक्षणसिद्धेः । जीवान्यत्ववादाश्च बद्धान्यत्वविषयाः स्युः ।

ममैवांशो जीवलोके जीवभूतस्सनातनः ।

## आनन्ददायिनी

पाप्मत्वं कथमित्यत्राह--**अपहतेति** । "यथा सतः पुरुषात्" इत्यत्रापि परमात्मैव चेतनद्वाराऽधिष्ठाय जनयतीति न तद्विरोधोऽपीत्याह—**प्रकृतिं पुरुषं चैवेति** । यथाऽचेतनस्येक्षणाद्ययोगात् न कारणवाक्यप्रतिपाद्यत्वं तथा जीवस्यापीत्याह---**न चेति** । ननु जीवस्य मुख्येक्षणानुपपत्त्या न कारणत्वमिति शङ्कते—**मुक्तस्तर्हीति** । किंच तस्यैव कारणत्वं युक्तम्; क्वचित् सङ्कल्पमात्रेण सृष्टौ कारण[1]त्वस्याङ्गीकारादित्याह--[2]**तस्येति** । ननु 'पृथगात्मानं' इत्यादिभेदश्रुतेः कथमेवमित्यत्राह—**जीवान्यत्ववादाश्चेति** । **ममैवेति** । अन्यथा 'जीवभूतस्सनातनः' इति विरुध्येतेति भावः । ननु जगत्कारणस्य

1 त्वाङ्गी—**ग.** 2 तस्य चेति—**ग.**

## सर्वार्थसिद्धिः

इति जीवत्वस्यावस्थारूपत्वोक्तेः ; मुक्तस्यैव हिरण्यगर्भादिदेहाधिष्ठानेन सृष्टिस्थित्यादिहेतुत्वमिति सर्वपुराणादिसामरस्यमिति ; तदपि मन्दम् ; एकस्यैवानाद्यन्तस्य सर्वमुक्तोपसृप्यत्वश्रवणात्,

" मम साधर्म्यमागताः "

स्वातन्त्र्यमतुलं प्राप्य तेनैव सह मोदते ।

इत्याद्युपबृंहणविरोधाच्च ।

सायुज्यं प्रतिपन्ना ये तीव्रभक्तास्तपस्विनः ।
किङ्करा मम ते नित्यं भवन्ति निरुपद्रवाः ॥

इति च भगव[1]दुक्तः। मोक्षधर्मे च " अनेन साम्यं यास्यामि " इति मुमुक्षोरभिसन्धिवचनम् । प्रपञ्चितं चैतत्—

परेण [2]परधर्मीव भवत्येष समेत्य वै ।

## आनन्ददायिनी

हिरण्यगर्भाद्यधि[3]ष्ठातृत्वं दृश्यते, न चान्यो जीवो जीवान्तरमधिष्ठातुं समर्थ इत्यत्राह —**मुक्तस्यैवेति** । सङ्कल्पमात्रेण सृजतोऽधिष्ठातृत्वोपपत्तेरिति भावः । 'मुक्तोपसृप्यव्यपदेशाच्च' इति सौत्रहेतुना निराचष्टे— **एकस्यैवेति । ममेत्यादि ।** मुक्तेभ्योऽपि भेदावगमादिति भावः । ननु उपबृंहण एव स्वातन्त्र्यमतुलत्वेन विशेषितं, तथा च प्राप्यस्य यत् स्वातन्त्र्यं तादृशमिति लभ्यते । तत् स्वातन्त्र्यं च सृष्टिसंहारकर्तृत्वमेव, भेदवादश्च कथं चिन्नय इत्यत्राह—**सायुज्यमिति** । नित्यं किङ्करा इति युक्तं, न तु नित्यं निरुपद्रवा इति, व्यवधानात् । नन्वत्र साम्यशब्द ऐक्यपरोऽस्त्वित्यत्राह—**प्रपञ्चितमिति** । परेण समेत्य परधर्मीव

---

[1] दुक्तेः—घ. [2] परधर्मेण भवत्येष—परधर्मे च भवत्येष—परधर्मी च—पा.
[3] ष्ठानं द—ग.

